विचारपारुष्यवशात् सुसौभाग्यविवर्जितम् ।
यत्पदं तत्तु विद्वद्भिर्म्लानमित्यभिधीयते ॥ ५१ ॥

यत्र सन्दृश्यतेऽत्यर्थं पदे तुच्छाभिधेयता ।
तदपुष्टार्थमित्याहुः सर्वे साहित्यवेदिनः ॥ ५२ ॥

शब्दशास्त्रविरुद्धं यत् प्रबन्धे प्रतिपाद्यते ।
शब्दतत्त्वविशेषज्ञैस्तदसाधु निगद्यते ॥ ५३ ॥

यदुक्तमन्यथा काव्ये कवीनां समयोऽन्यथा ।
तदेव सम्यगस्माभिः समयच्युतमुच्यते ॥ ५४ ॥

यस्यासमर्थतात्यर्थमिष्टस्यार्थस्य सूचने ।
अक्षमार्थान्तरं तत्तु कथ्यते कविपुङ्गवैः ॥ ५५ ॥

दुरुच्चारतया काव्ये यदश्राव्याक्षरं पदम् ।
तदत्र सुकविव्रातैः कष्टमित्यभिधीयते ॥ ५६ ॥

लेशेनापि प्रबन्धेषु सुप्रसिद्धं न यत् पदम् ।
तदप्रयुक्तमित्याहुः सर्वे साहित्यकोविदाः ॥ ५७ ॥

वक्तव्यार्थमतिक्रम्य यदन्यत्रापि वर्तते ।
तदत्र लक्षणेऽस्माभिः ससंशयमुदाहृतम् ॥ ५८ ॥

अर्थान्तरं विरुद्धं स्याद्यत्र प्रस्तुतवस्तुनः ।
विरुद्धार्थान्तरं प्रोक्तं तदत्र निपुणाशयैः ॥ ५९ ॥

वाञ्छितार्थात्परिभ्रष्टं पदं भ्रष्टमिहोच्यते ।
अन्यार्थमर्थहीनं च तद् द्विधा परिकीर्त्यते ॥ ६० ॥

१. P $T_3$ यस्य·
२. P $T_3$ असाधुशब्दशास्त्रं यत्प्रबन्धे.
३. $T_1$ च For यत ·
४. M वेदिनः.
५. $PT_3$ omit the next 17 lines

तदपार्थमिति ज्ञेयं यदप्रस्तुतजीवकम् ।
सद्यः सभ्येतरार्थस्य स्मारकं ग्राम्यमुच्यते ॥ ६१ ॥

अस्तुतं तद्बुधैरुक्तं यदमङ्गलवाचकम् ।
प्रसिद्धस्याभिधानस्य पर्यायैः स्वेच्छया कृतम् ॥ ६२ ॥

एकार्थैर्वाथ भिन्नार्थैः पर्यायज्ञापकं भवेत् ।
यस्य व्युत्पत्तिलेशोऽपि चिन्त्यमाने न दृश्यते ॥ ६३ ॥

तदत्र पदतत्त्वज्ञैर्दृश्यमित्यभिधीयते ।
असम्भाव्यो यदर्थस्य सञ्चयः कलही मिथः ॥ ६४ ॥

तदुच्यतेऽत्र विद्वद्भिरसम्भाव्यार्थसाधकम्
एवमेते मया प्रोक्ता दोषाः पदसमाश्रयाः ॥ ६५ ॥

वाक्याश्रया निगद्यन्ते सुव्यक्तं लक्षणैस्सह ।
शब्दच्युतं क्रमापेतमश्राव्यं पुनरुक्तिमत् ॥ ६६ ॥

छन्दोभङ्गाकुलं ग्राम्यं व्याकीर्णं भग्नरीतिकम् ।
यतिभङ्गाश्रयं न्यूनमधिकं वाक्यगर्भितम् ॥ ६७ ॥

विरुद्धसन्धिनिस्सन्धी तुच्छार्थकमवाचकम् ।
इति वाक्यगता दोषाष्षोडशेह निरूपिताः ॥ ६८ ॥

यत्सङ्गत्या स्फुटं याति सुशब्दोऽप्यपशब्दताम् ।
तद्वाक्यमत्र साहित्ये शब्दच्युतमिति स्मृतम् ॥ ६९ ॥

पदार्थक्रमनिर्मुक्तं क्रमापेतमिति स्मृतम् ।
बन्धकार्कश्यवद्वाक्यमश्राव्यं कवयो विदुः ॥ ७० ॥

शब्दार्थयोः परावृत्त्या युक्तयोः पुनरुक्तिमत् ।
छन्दसा विकलं वाक्यं छन्दोभङ्गाकुलं भवेत् ॥ ७१ ॥

उक्तिचातुर्यरहिता ग्राम्यमित्यभिधीयते ।
असङ्गताभिराकीर्णं व्याकीर्णं स्याद्विभक्तिभिः ॥ ७२ ॥

प्रारब्धरीतिविच्छेदो यत्र तद्भग्नरीतिकम् ।
यतिभङ्गेन संयुक्तं यतिभङ्गाश्रयं विदुः ॥ ७३ ॥

यस्यापरिसमाप्तिः स्यात् तन्न्यूनमिति कथ्यते ।
अपर्याप्ततया ह्यर्थो यत्रैकः पर्यवस्यति ॥ ७४ ॥

पदानामिह तद्वाक्यमधिकं कथ्यते बुधैः ।
अत्यर्थसङ्गतार्थत्वाद्वाक्यं वाक्यान्तरस्थितम् ॥ ७५ ॥

दुःखेन ज्ञापनीयार्थं वाक्यगर्भितमुच्यते ।
विरुद्धसन्धिग्राम्यादिः प्रस्तुतार्थस्य घातकः ॥ ७६ ॥

निन्द्यरूपोऽथवा नष्टो निस्सन्धिरभिधीयते ।[1]
तुच्छार्थकमिहाख्यातमौदार्यस्य विपर्ययः ॥ ७७ ॥

नार्थं विवक्षितं वक्ति यत्तदाहुरवाचकम् ।
एते वाक्यगता दोषा वाक्यार्थस्थान् वदाम्यहम् ॥ ७८ ॥

औचित्यभङ्गः सन्देहो रीतिभङ्गः क्रमच्युतिः ।
उपक्रमोपसंहारविषमं दुष्टभूषणम् ॥ ७९ ॥

दुष्प्रतीतिकरं चेति सप्त वाक्यार्थसंश्रयाः ।
औचित्यभङ्गो विज्ञेयः स्वात्मप्रख्यापनादिकम् ॥ ८० ॥

सन्देहः पदजातस्य सन्दिग्धार्थत्वमुच्यते ।
प्रारब्धस्यान्यथाभावो रीतिभङ्ग उदाहृतः ॥ ८१ ॥

---

१. T1. 2 M omit this line.

अपक्रमाभिधेयत्वं क्रमच्युतिरिति स्मृता ।
उपक्रमोपसंहारविषमं वाच्यवक्रता ॥ ८२ ॥

भिन्नलिङ्गोपमारीतिर्दुष्टभूषणमुच्यते[1] ।
सभ्येतरस्य स्पष्टोक्तिर्ग्राम्यमित्याभिधीयते ॥ ८३ ॥

एतैर्दोषैरसंस्पृष्टं काव्यं सर्वैः प्रशस्यते ।

काव्यगुणाः ।

श्लेषः प्रसादः समता माधुर्यं सुकुमारता ॥ ८४ ॥

अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः ।
एते दशगुणाः प्रोक्ताः काव्यबन्धे कवीश्वरैः ॥ ८५ ॥

सुश्लिष्टपदसन्धानं श्लिष्टमित्यभिधीयेत ।
यस्यार्थः स प्रसादः स्यादनुक्तोऽपि प्रतीयते ॥ ८६ ॥

शब्दार्थौ समतान्योन्यं सालङ्कारौ सुसंस्कृतौ[2] ।
अप्युक्तं बहुशश्चेतःप्रीतिकृन्मधुरं मतम् ॥ ८७ ॥

पदैर्मृदुभिराकीर्णं सुकुमारमिहोदितम्[3] ।
अर्थव्यक्तिः पदोद्देशात् समस्तार्थावबोधिनी ॥ ८८ ॥

तदुदारत्वमासाद्य यन्मनो नावसर्पति ।
ओजः समासबहुलः सन्दर्भः सुमनोहरः ॥ ८९ ॥

चारणता कान्तिः सन्धिसन्धानसम्पदा ।
समाधिरन्यथाशब्दकल्पनीयार्थसञ्चयः ॥ ९० ॥

१. P T3 add भिन्नलिङ्गोपमाः भिन्नवचनोपमाः अधिकोपमाः अतीतगुणोपमाः इत्येवमाद्या दुष्टालङ्करणम् ।

२. P सुसंयुतौ.

३. P T3 सुकुमारं मनोरमैः.

अलङ्काराः।

अतः परमलङ्काराः क[1]थ्यन्ते सह लक्षणैः।
तत्र शब्दार्थसम्बन्धानु[2]भयोल्लासितानपि ॥ ९१ ॥

सम्यगेकत्र संक्षिप्य लिखामि मधुराक्षरम्।
अपन्हुतिः समासोक्तिरुपमा दीपकं क्रमः ॥ ९२ ॥

विशेषो रूपकं जातिरुत्प्रेक्षा व्याजवर्णनम्।
अप्रस्तुतस्तुतिः साम्यमेकावलिविभावने ॥ ९३ ॥

आक्षेपव्यतिरेकौ च श्लेषोऽर्थान्तरमेव च।
पर्यायोक्तं विरोधश्च सङ्कीर्णं रसवत् तदा ॥ ९४ ॥

अतिशयोक्तिरत्युक्तिर्वक्रोक्तिर्ध्वनिरेव च।
अन्योन्यमनुमानं च सचित्रयमकं तथा ॥ ९५ ॥

एते त्रिंशदलङ्कारा निर्दिष्टा रसकोविदैः।
व्यावर्णनीयं प्रच्छाद्य यत्रान्यत् किञ्चिदुच्यते ॥ ९६ ॥

असमं वा समं वाथ सा विज्ञेया ह्यपह्नुतिः।
बहुधा सा भवेद् व्याप्ता स्वरूपविजयादिषु ॥ ९७ ॥

वस्तु किञ्चिदभिप्रेत्य तत्तुल्यस्यान्यवस्तुनः।
उक्तिः संक्षिप्तरूपत्वात् सा समासोक्तिरि[3]ष्यते ॥ ९८ ॥

[4]विशेष्यमात्रभि[5]न्नापि तुल्याकारवि[6]शेषणा।
अस्त्यसावपराप्यस्ति भिन्नाभिन्नविशेषणा ॥ ९९ ॥

---

१. M1 वक्ष्यन्ते.
२. P T3 अनुभवोल्लासि.
३. P T3 उच्यते for इष्यते.
४. P T3 omit this and the next line.
५. T1 2 भिन्नाभिः for भिन्नापि.
६. T1 2 विशेषणैः for विशेषणा.

साधर्म्यमुपमा [1] प्रौढगुणवद्गुणवस्तुनोः ॥ ।
द्विविधा सापि कथिता सर्वसाहित्यकोविदैः ॥ १०० ॥

पदार्थविषया काचिद्वाक्यार्थविषयापरा ।
तत्रापि प्रथमा द्वेधा पूर्णा लुप्ता च कथ्यते ॥ १०१ ॥

धर्मोपमानोपमेयैः पूर्णता प्रतिपाद्यते ।
गुणादिलोपे लुप्ता स्यादुपमानपदे सति ॥ १०२ ॥

भवेद्वाक्यार्थयोर्या स्यादुपमानोपमेययोः ।
एकवाक्यार्थताप्राप्तिः सा वाक्यार्थोपमा स्मृता ॥ १०३ ॥

एकस्या बहवो भेदाः दृश्यास्सत्कविवर्त्मनि ।
मुख्यार्थवस्तुना युक्तैस्तद्वाक्यैस्सह सङ्गतिम् ॥ १०४ ॥

सन्दधद्[2]द्योतयत्यर्थांस्तत् पदं दीपकं [3]स्मृतम् ।
पदान्तर्गतवाक्यैर्वा कारकैरन्वितं यदि ॥ १०५ ॥

पदमेकं क्रियावाचि तत्क्रियादीपकं भवेत् ।
यद्भूरिवाक्यसम्बन्धक्रियाणामेकमेव चेत् ॥ १०६ ॥

उच्यते कारकपदं तत् स्यात् कारकदीपकम् ।
यत्र दीपकसूत्रेण वाक्यपुष्पाणि सत्कविः ॥ १०७ ॥

ग्रथ्नात्यपूर्वविच्छित्त्या तन्मालादीपकं विदुः ।
उपमानोपमेयानां यः सम्बन्धः क्रमोदितः ॥ १०८ ॥

1. For Ślokas 100 b to 104 a M $T_1$. 2 read :
यथा कथञ्चित्सादृश्यं यत्रोद्भूतं प्रतीयते ।
उपमा नाम सा तस्याः प्रपञ्चः सुमहान् भवेत् ॥
धर्मवस्तुविपर्यासनियमातिशयाश्रयाः ।
मोहोत्प्रेक्षानियमा दृश्यास्सत्कविवर्त्मसु ॥ (?)

2. M बोधयत्यर्थान्.

3. $T_2$ भवेद्.

अत्युत्तमार्थादधिको योऽर्थः सोऽतिशयः स्मृतः ।
यत्राकारगभीरोक्त्या पृच्छा पृष्टार्थकीर्तनम् ॥ २१ ॥

पृष्टैरपृष्टैर्व्याख्यानं कश्चिदर्थस्य निर्णयः ।
अर्थेनाभिमते रम्या प्रतिषेधो हि विक्रिया ॥ २२ ॥

अनुनीतिरपूर्वस्य क्रोधस्योद्दीपनक्रिया ।
अनेकयुक्तिमद्वाक्यं तन्निर्भासनमुच्यते ॥ २३ ॥

दोषानुत्सार्य कार्यं स्याद् गुणेऽर्थस्य निवेशनम् ।
अकार्यं सहसा कृत्वा पश्चात्तापोऽनवस्थितिः ॥ २४ ॥

नाट्यव्यवहारोपयोगिपरिभाषाः ।

आक्रीडं देहली हञ्जे हळा हीमाणहे (ति च ! सखी)
ओपट्टिकं वरण्डी ही पुरोभागजनान्तिके ॥ २५ ॥

आकाशहन्तस्वगतप्रकाशस्वामिभावकाः ।
ऊराजन्भावभगवन्नज्जभट्टिगेगण्डिकाः ॥ २६ ॥

ईशमेन्तम्महेरण्डबाढमाभर्तृदारिकाः ।
स्वामिन्यात्मगतं कान्ते प्रिये हे मञ्जुभाषिणि ॥ २७ ॥[1]

आर्ये देव विभो वत्स सारथे राजदारिके ।
हण्डः कुलपतिर्वृद्धसौदामिन्यामनामतः ॥ २८ ॥

आवुत्तो भगवत्यत्ता गुरुर्जाद हमज्जुका ।
आयुष्मन् प्रथमः कल्पः विजया सार्थवाहकः ॥ २९ ॥

चम्पकाशोकपुन्नागमालतीयूथिकावृतम् ।
आहुरुद्यानमाक्रीडं नामतो नाट्यकोविदाः ॥ ३० ॥

---

1. Eighteen lines from this are lost in T8.

गृहालिन्दकभागस्तु देहलीति निगद्यते ।
नाटके नाट्यतत्त्वज्ञैर्वक्तव्या साधु सा क्वचित् ॥ ३१ ॥

नियमेनैव वक्तव्या हञ्जेति परिचारिका ।
गणिकाभिरथान्याभिः समया सा निगद्यते ॥ ३२ ॥

हञ्जेति कथ्यते चेटी नाटके नायिकाजनैः ।
गणिकाभिरपि क्वापि विनोदे राजदारिका ॥ ३३ ॥

शकाराभीरचण्डालश्वपाकवृषलादिभिः ।
हीमाणहे इति स्पष्टं वक्तव्यं सदृशे जने ॥ ३४ ॥

समानरूपसम्पत्तिशीलादिगुणशालिनी ।
सखीति कथ्यते नारी नारीभिर्नाटकाश्रिता ॥ ३५ ॥

विद्यमानेषु मनसि कार्यजातेष्वनेकधा ।
तदौपह्विकमित्याहुः प्रधानं यन्मनीषिणाम् ॥ ३६ ॥

आकाशे वातसंयोगात्सञ्जातो यो वरण्डकः ।
स एवान्येन शब्देन वरण्डीत्यभिधीयते ॥ ३७ ॥

भयाहङ्कारसम्मानमोहकण्ठग्रहादिषु ।
हीशब्दोऽपि प्रयोक्तव्यश्चटचेटीविदूषकैः ॥ ३८ ॥

पश्चात्तापप्रवासोर्वीचलनप्राणहानिषु ।
नायिकाहृदयोत्कम्पः पुरोभाग इति स्मृतः ॥ ३९ ॥

त्रिपताकं करं कृत्वा यदन्यस्य मनोगतम् ।
अप्रकाशं जनो वक्ति तज्जनान्तिकमुच्यते ॥ ४० ॥

अप्रत्यक्षेण पात्रेण सह रङ्गस्थितो नरः ।
यद्वक्त्यभिमुखीकृत्य तदाकाशं प्रचक्षते ॥ ४१ ॥

१. T1 उदाहृतं, MT2 इति स्मृतं for प्रचक्षते ।

पुरोहितद्विजामात्यविटनेतृतपस्विभिः ।
विषादभयचिन्तासु हन्त ! इत्यभिधीयते ॥ ४२ ॥

समीपावस्थितेष्वन्येष्वनेकेष्वाप्तबुद्धिषु ।
मनसा यन्नरो वक्ति स्वगतं तन्निगद्यते ॥ ४३ ॥

मनस्यवस्थितं कार्यं पुरतः पार्श्ववर्तिनाम् ।
निश्शङ्कमुच्यते यत्तु तत्प्रकाशं विदुर्बुधाः ॥ ४४ ॥

चमूपरिवृढामात्यजनतामण्डलेश्वरैः ।
स्वामीति विजयोल्लासी चक्रवर्ती निगद्यते ॥ ४५ ॥

समस्तख्यातसाहित्यसारनिष्णातमानसः ।
विचारचतुरः प्राज्ञो रसिको भावकः स्मृतः ॥ ४६ ॥

विरहोन्मादमूर्च्छायामीर्ष्यायां वाङ्गनाजनैः ।
ऊ इत्येवानभिव्यक्तं वक्तव्यं नाटकादिषु ॥ ४७ ॥

उदात्तजातिविख्यातदेवब्राह्मणलिङ्गिभिः ।
नृपतिर्नाटकगतो राजन्नित्येव कथ्यते ॥ ४८ ॥

नटेन नाटके सूत्री भाव इत्यभिधीयते ।
सर्वाश्रमगतो वर्णी वा वर्णिव्यञ्जनो जनः ॥ ४९ ॥

रङ्गे रङ्गगतैः पात्रैर्भगवन्निति कथ्यते ।
नाट्ये विदूषकप्रायो (यो जनः) स व ॑ः ॥ ५० ॥

अज्ज इत्येव वक्तव्यो हीनोऽपि ब्राह्मणो यदि ।
नेतुर्या ख्यातमहिषी रूपसम्पद्गुणादिभिः ॥ ५१ ॥

भृत्यवनितावर्गैः वक्तव्या भट्टिणीति सा ।
स या वेश्या क ··· वेशे (?) स्वयं च गणिकायते ॥ ५२ ॥

सा नाट्ये नाट्यवेदज्ञैः गण्डिकेति निगद्यते ।
पीठमर्दशठक्रूरधूर्तचेटीविटादिभिः ॥ ५३ ॥

निन्दायामथवा गर्वे ईशब्दः सम्प्रयुज्यते ।
विद्याविनयसम्पन्नो द्विजन्मा नाट्यकोविदैः ॥ ५४ ॥

नाम्ना सहैव सम्बुद्धौ हे शर्मन्निति कथ्यते ।
यदृच्छाधिगमे प्रायो दुर्लभस्येह वस्तुनः ॥ ५५ ॥

नायिका वक्ति सन्तोषान्नित्यमम्मह इत्यलम् ।
या रण्डा वर्णिपाषण्डैश्चण्डालैर्वा विनाशिता ॥ ५६ ॥

नाटके नाट्यशास्त्रज्ञैः सा रण्डेत्यभिधीयते ।
येन केनापि मान्येन प्रार्थ्यमानस्य वस्तुनः ॥ ५७ ॥

अङ्गीकारेषु वक्तव्यं बाढमित्येव नायकैः ।
बहुधा चिन्त्यमानस्य दुर्विज्ञेयस्य वस्तुनः ॥ ५८ ॥

सहसा ज्ञानसम्पत्तावा इत्यार्यैर्निगद्यते ।
या राजपुत्री विख्याता निश्शेषजनवन्दिता ॥ ५९ ॥

राजश्रिया समायुक्ता सा कन्या भर्तृदारिका ।
सिंहासनाधिरूढा या पट्टोल्लासिलल्लाटिका ॥ ६० ॥

सा राजपुरुषैर्मुख्यैः स्वामिनीति निगद्यते ।
मनसा चिन्तयित्वार्थं हस्तविन्यस्तमस्तकः ॥ ६१ ॥

भूयशो यद्वदेदन्तस्तदात्मगतमुच्यते ।
कान्तेति नायको ब्रूते दक्षिणः पूर्ववल्लभाम् ॥ ६२ ॥

शठः स्वस्यानभिप्रेतां प्रियेति वदति स्त्रियम् ।
नाटकादिषु सर्वत्र विटः सर्वाङ्गनाः मतिः ॥ ६३ ॥

मञ्जुभाषिणीत्येव वदत्यधिकबुद्धिमान् ।
वणिक्पुरोहितामात्यविटविप्रविदूषकाः ॥ ६४ ॥

कथ्यन्ते मध्यमैः पात्रैरार्यशब्देन सर्वदा ।
स्वप्रधानादिभिर्भूपो देव इत्यभिधीयते ॥ ६५ ॥

विभुशब्देन वक्तव्या देशाधिपतयो द्विजाः ।
ज्येष्ठोपाध्यायपितृभिरन्यैरपि च तत्समैः ॥ ६६ ॥

वत्स इत्येव वक्तव्याश्चैवर्णिककुमारकाः ।
रथी सारथिशब्देन स्वसूतं वक्ति नाटके ॥ ६७ ॥

सूत इत्येव वा क्वापि नान्यथा कथनक्रमः ।
राजकीयैर्जनैः सर्वा महीपप्रियनन्दनाः ॥ ६८ ॥

दारिकेत्येव वक्तव्या राजपूर्वाः कुलाधिकाः ।
सर्वत्र हीनसम्बुद्धौ हण्ड इत्यभिधीयते ॥ ६९ ॥

सर्वविद्यासु कुशलः सर्वाश्रमपदेश्वरः ।
मुनिः कुलपतिः सर्वैर्वक्तव्यो नाटकाश्रितः ॥ ७० ॥

वड्ढेति विनयाभावे नीचपात्रैः प्रयुज्यते ।
विद्याधरी स्वकान्तेन सौदामिन्यभिधीयते ॥ ७१ ॥

सावज्ञमङ्गीकरणे तज्ज्ञैरामेति कथ्यते ।
आह्वानं कुर्वतेऽन्योन्यं धूर्ता नाम्नैव केवलम् ॥ ७२ ॥

आवुत्तो गणिकाकान्तो भगवत्यपि वर्णिनी ।
अत्तेति गणिकामाता गुरुः कापालिकः स्मृतः ॥ ७३ ॥

१. T[3] इत्येव कथ्यते ।

जातेति पुत्रवात्सल्यान्मात्रा पुत्रोऽभिधीयते ।
सर्वावज्ञाविशेषोत्थकामचाराभिभाषणे ॥ ७४ ॥

हुमित्येवाभिधातव्यं सर्वैरिङ्गितगोपने ।
भर्तृमाताङ्गनाभिर्वा चेटीभिर्गणिकाथवा ॥ ७५ ॥

वार्तासु सर्वदा काममज्जुकेति[1] निगद्यते ।
आयुष्मन्निति वक्तव्यो रथी सारथिना सदा ॥ ७६ ॥

अभीष्टवस्तुसंसिद्धौ येन केनापि चोदितः ।
प्रथमः कल्प इत्येव प्रवदत्याप्तनायकः ॥ ७७ ॥

प्रतिहारीजनः सर्वो विजयेत्यभिधीयते ।
वणिक्प्रधानो यो लोके स स्मृतः सार्थवाहकः ॥ ७८ ॥

सर्वेश्वरः सरसधीः प्रतिबुद्धशास्त्रः
थीवामराशिगुरुपादयुगप्रसादात् ।
विद्वन्मुदे नियतभाषितसर्वभाषा-
विज्ञानकृद् व्यधित साधु निरुक्तमेतत् ॥ ७९ ॥

[2]इति श्रीमन्मलयजमहापण्डितसर्वेश्वराचार्यविरचिते साहित्यसारे

तृतीयः प्रकाशः ।

१. P केत्यभिधीयते.

२. M P T3 इति साहित्यसारे तृतीयः प्रकाशः.

# चतुर्थः प्रकाशः

अङ्कावतारः ।

अङ्कस्यान्ते समुत्पत्तिरङ्कस्यार्थाविशेषतः ।
**अङ्कावतारः** कथितः सर्वनाटककोविदैः ॥ १ ॥

विष्कम्भकः ।

**विष्कम्भकस्तु** संक्षेपादतीतागतवस्तुनोः ।
सूचको मध्यमकृतः **शुद्धः** सद्भिरुदाहृतः ॥ २ ॥

नीचमध्यमपात्राभ्यां कृतः **सङ्कीर्णको** भवेत् ।

चूलिका ।

नैपथ्यपात्रविहिता सूचनार्थस्य **चूलिका** ॥ ३ ॥

नायिका ।

उदारा चतुरा प्राज्ञा मृद्वी रूपान्विता सती ।
**नायिका** कथ्यते सद्भिर्नाटके नायकोचिता ॥ ४ ॥

स्वकीयान्यासमानेति सा पुनस्त्रिविधा भवेत् ।

स्वकीयानायिकाभेदाः ।

**स्वकीया** विधिवन्नेत्रा संप्राप्तकरपीडना ॥ ५ ॥

मुग्धा मध्या प्रगल्भेति सापि त्रेधा निगद्यते ।
**मुग्धा** स्वल्पवयाः क्रोधी मृद्वी सम्मुग्धभाषिणी ॥ ६ ॥

अज्ञातसुरतोल्लासा किञ्चिदुद्यन्मनोभवा ।
न कोऽपि भेदो नाट्यादौ सर्वत्रैकविधावसौ ॥ ७ ॥

---

१८ P T. सर्वत्रैकविधैव सा.

धीरा मध्या त्वधीरेति मध्यमा त्रिविधा भवेत् ।
**धीरा मध्या** सललितं पश्यति स्मेरया दृशा ॥ ८ ॥

कथाभिः सोपहासाभिर्दुनोति दयितं क्रुधि ।
**स्वयं मध्या** समुद्भिद्यद्यौवनानङ्गशालिनी ॥ ९ ॥

मोहान्तसुरतोल्लासा कोपे किञ्चिद्विकत्थना ।
**मध्या धीरेतरा** बद्ध्वा करे गद्गदभाषिणी ॥ १० ॥

कृतापराधं दयितं सखीनां ताडयेत् पुरः ।
धीरा मध्या त्वधीरेति प्रगल्भापि त्रिधा भवेत् ॥ ११ ॥

**धीरा प्रगल्भा** सक्रोधा सोल्लासेनैव चक्षुषा ।
सापराधं प्रियं दृष्ट्वा सावहित्थादरा भवेत् ॥ १२ ॥

**प्रगल्भा स्वयमुद्भिन्नमन्मथोन्मादमन्थरा ।**
सुरतालापलीलायामप्यत्यर्थविचेतना[२] ॥ १३ ॥

विलीयमानेवाभाति दयितालोकने मुदा ।
कोपे मधुरसस्यन्दि वक्रोक्त्या खेदयेत् प्रियम् ॥ १४ ॥

**धीरेतरा प्रगल्भा**[३] तु कुपिता मदमन्थरम् ।
प्रियं प्रत्यप्रियं वक्ति गम्भीरमधुराक्षरम् ॥ १५ ॥

मध्याप्रगल्भाभेदानां प्रत्येकं भरतादिभिः ।
ज्येष्ठाकनिष्ठाभेदेन द्वादशैताः प्रकीर्तिताः ॥ १६ ॥

**अन्यानायिका ।**

अन्याधीनतया काव्येष्वन्यस्त्री कन्यका मता ।
नान्योढा कथ्यते क्वापि रसेऽङ्गिनि[४] कवीश्वरैः ॥ १७ ॥

---

१. M T1. 2. आनन्द for अनङ्ग.
२. P T3. अचेतना for विचेतना.
३. PT3. प्रगल्भेयम्.
४. PT3. रसता.

र्यादङ्गाङ्गिसम्बन्धं कन्यकामदनोदयम् ।
न्योढाचरितं कापि जनहासाय विन्यसेत् ॥ १८ ॥

समाना नायिका ।

कलासु कुशला धूर्ता समाना गणिका स्मृता ।
ात्र तद्विस्तरोऽस्माभिरुच्यतेऽन्यत्र रूढितः ॥ १९ ॥

नायिकावस्थाः ।

आसामवस्थाश्शास्त्रोक्ता भवन्त्यष्टौ मनोहराः ।
उत्कण्ठिता विप्रलब्धा खण्डिता प्रोषितप्रिया ॥ २० ॥

स्वाधीनपतिकाश्लिष्टा वाससज्जाभिसारिके ।
प्रिये चिरयति व्यक्तं कुपितोत्कण्ठिता भवेत् ॥ २१ ॥

विप्रलब्धा समदना सङ्केतच्छलिता वधूः ।
व्यक्तव्यलीके दयिते खण्डिता रोषरूषिता ॥ २२ ॥

यस्या देशान्तरगतो भर्ता सा प्रोषितप्रिया ।
स्वदासकल्पदयिता स्वाधीनपतिका भवेत् ॥ २३ ॥

प्रिये निर्वासिते रोषादश्लिष्टा तापपीडिता ।
अलङ्कृता वसेत् प्रीत्या वाससज्जा प्रियागमे ॥ २४ ॥

कामार्ताभिसरेत् कान्तं सारयेद् वाभिसारिका ।

।

दूत्यो दासी सखी कारुर्धात्रेयी प्रातिवेशिका ॥ २५ ॥

लिङ्गिनी शिल्पिनी स्वं च नेतृमित्रगुणान्विताः ।
दासी स्वकीया चेटीस्यात् सखी स्वस्याः समा वधूः ॥ २६ ॥

रजकी कारुरुदिता धात्रेयी मातृसन्निभा ।
प्रतिवेश्मनि तिष्ठन्ती कथ्यते प्रातिवेशिका ॥ २७ ॥

लिङ्गिनी भिक्षुणी प्रोक्ता शिल्पिनी चित्रकारिका ।
स्वयं चेत्येवमेवात्र दूतीनामष्टकं भवेत् ॥ २८ ॥

नायिकानां सात्विकावस्थाः ।

नारीणां सत्वसम्भूता ह्यलङ्करणविंशतिः ।
भावहावौ च हेला च स्त्रीणामङ्गोद्भवास्त्रयः ॥ २९ ॥

शोभा कान्तिश्च दीप्तिश्च माधुर्यं च प्रगल्भता ।
औदार्यं धैर्यमित्येते सप्त ख्याता ह्ययत्नजाः ॥ ३० ॥

लीला विलासो विच्छित्तिर्विभ्रमः किलिकिञ्चितम् ।
मोट्टायितं कुट्टमितं बिम्बोको ललितं गतिः ॥ ३१ ॥

एते स्वाभाविका ख्याता दश विश्वे च विंशतिः ।
रागाविष्टं मनो भावः हावस्तत्सूचनाविधिः ॥ ३२ ॥

स एव हेला सुव्यक्ता शृङ्गाररसपोषकः ।
यौवनोदयसम्भोगैः शोभा देहगता द्युतिः ॥ ३३ ॥

मदनोद्दीपिताकारा सैव कान्तिरिति स्मृता ।
प्रतीयमानोऽपरथा दीप्तिः स्यात् कान्तिविस्तरः ॥ ३४ ॥

अनुल्बणत्वं माधुर्यं परुषेणापि वस्तुना ।
प्रागल्भ्यं साध्वसाभावः कामसन्दीपनोचितः ॥ ३५ ॥

औदार्यमुद्धतस्यापि प्रश्रयोन्मिश्रभाषणम् ।
अतिस्थिरगुणाश्लिष्टा मनोवृत्तिस्तु धैर्यकम् ॥ ३६ ॥

1. P T 3 have the following line in addition ;
उपमातुर्मता पुत्री धात्रेयी सोदरोपमा ।

प्रियानुकरणं लीला मधुराङ्गविचेष्टितैः ।
तत्कालजनितोल्लासो विलासोऽङ्गक्रियादिषु ॥ ३७ ॥

स्वल्पाप्याकल्परचना विच्छित्तिः कान्तिपोषकृत् ।
त्वरया विभ्रमः स्थाने भूषास्थानविपर्ययः ॥ ३८ ॥

अश्रुक्रोधभयादीनां सङ्करः किलिकिञ्चितम् ।
मोट्टायितं प्रियालापे तद्भावपरिभावनम् ॥ ३९ ॥

सानन्दमन्तः कुट्टमितं क्रोधः केशग्रहादिषु ।
गर्वादिष्टतमे पुंसि बिम्बोकोऽनादरक्रिया ॥ ४० ॥

सुकुमारोऽङ्गविन्यासो मसृणं ललितं भवेत् ।
विचित्रकथना प्रायो भङ्गिरेव गतिर्भवेत् ॥ ४१ ॥

नायकभेदाः ।

स्वभावशुद्धो मेधावी रक्तलोको दृढव्रतः ।
शूरः प्रियंवदस्त्यागी मधुरो लोकविश्रुतः ॥ ४२ ॥

युवा विद्वत्प्रियो भोगी गीतादौ निपुणः प्रभुः ।
नाटके नायकः प्रोक्तो नाट्यशास्त्रविचक्षणैः ॥ ४३ ॥

धीरोपपदसम्बन्धैः सम्भेदैर्लोकविश्रुतैः ।
नेता चतुर्धा लक्षितः शान्तोदात्तोद्धतैरिह ॥ ४४ ॥

निश्चिन्तो यौवनोद्दामः कलाकुशलमानसः ।
समृद्धो धीरललितो विलासी वनिताप्रियः ॥ ४५ ॥

सामान्यगुणभूयिष्ठः सविशेषपराक्रमः ।
मितभाषी निर्विकारो धीरशान्तो द्विजादिकः ॥ ४६ ॥

---

१. M. आकार for आकल्प.

२. P विचित्रकथनप्राया.

महासत्त्वोऽतिगम्भीरः क्षमावानविकत्थनः ।
स्थिरो निगूढाहङ्कारो धीरोदात्तो दृढव्रतः ॥ ४७ ॥

गर्वितो मत्सरग्रस्तो मायावी कामनिष्ठुरः ।
धीरोद्धतो हितद्वेषी वीरश्चण्डो विकत्थनः ॥ ४८ ॥

रसे चतुर्विधो नेता शृङ्गारे नाटकादिषु ।
अनुकूलो दक्षिणश्च शठो धृष्ट इति क्रमात् ॥ ४९ ॥

एकामेवाश्रयेद् यस्तु सोऽनुकूल इति स्मृतः ।
ज्येष्ठायामपि गेहिन्यां सस्नेहो दक्षिणो भवेत् ॥ ५० ॥

गूढविप्रियकारी यः स शठः कथ्यते बुधैः ।
व्यलीकविक्रमश्लाघी धृष्टो लज्जाविनाशकः ॥ ५१ ॥

पूर्वोक्तास्ते तु चत्वारः प्रत्येकोऽर्थदशावशात् ।
काव्यनाटकभेदेषु भवन्त्येव हि षोडश ॥ ५२ ॥

नैव भेदोऽनुकूलस्य स्थिरैकदयितास्थितेः ।
ज्येष्ठमध्यकनिष्ठत्वसम्पादनविधिक्रमात् ॥ ५३ ॥

अष्टाधिकं पुनस्तेऽपि चत्वारिंशद् भवन्ति च ।

नायकस्य सात्त्विकगुणाः

शोभा विलासो माधुर्यं गाम्भीर्यं स्थैर्यतेजसी ॥ ५४ ॥

ललितौदार्यमित्यष्टौ सत्त्वजाः पौरुषा गुणाः ।
दीनेषु करुणा स्पर्धा गुणाढ्येषु पराक्रमः ॥ ५५ ॥

दक्षता शस्त्रविषये शोभेति विदुषां मता ।
गतिर्गभीरा दृष्टिश्च सगर्वा सस्मितं वचः ॥ ५६ ॥

विलासः सत्त्वसम्पन्नः पुरुषस्य निगद्यते ।
मन्दो विकारो माधुर्यं संक्षोभे सुमहत्यपि ॥ ५७॥

विकारहेतावुत्पन्ने गाम्भीर्यं निर्विकारता ।
व्यवसायादचलनं विघ्नैरत्यर्थमाकुलात् ॥ ५८ ॥

नेतुरुत्तमभावस्य स्थैर्यमाहुर्मनीषिणः ।
अधिक्षेपादिदोषाणां कृतानामहितैर्जनैः ॥ ५९ ॥

सद्यः स्वप्राणनाशेऽपि तेजः स्यादसहिष्णुता ।
शृङ्गाराकारचेष्टावन्मृदुत्वं ललितं विदुः ॥ ६० ॥

औदार्यं प्राणदानादि परस्योज्जीवनेच्छया ।

नायकसहायादयः ।

तत्सहायाः पीठमर्दस्तथा विटविदूषकौ ॥ ६१ ॥

किञ्चिन्न्यूनगुणस्तस्मात् पताकानायको महान् ।
सर्वविद्यासु निपुणः पीठमर्दोऽभिधीयते ॥ ६२ ॥

एकविद्याविशेषज्ञो विटः सुललिताकृतिः ।
हाससम्पादनपटुर्विरूपो हि विदूषकः ॥ ६३ ॥

लुब्धो धीरोद्धतः स्तब्धो नीतिशून्योऽतिगर्वितः ।
परनिन्दानिरतधीः पापकृत् प्रतिनायकः ॥ ६४ ॥

मन्त्री स्वं वा सखा तस्य द्वयं वा द्रव्यचिन्तने ।
सचिवायत्तसंसिद्धिर्ललितो नायको भवेत् ॥ ६५ ॥

उभयायत्तसिद्धिः स्याद्धीरशान्तो महामतिः ।
मन्त्रिष्वारोपितभरः प्रत्यक्षं मनसा स्वयम् ॥ ६६ ॥

स्वतन्त्रं कुरुते कार्यं धीरोदात्तस्तु नायकः ।
नेता धीरोद्धतः शश्वत् स्वाधीनाशेषकारकः ॥ ६७ ॥

धर्मेषु देवभूदेवगुरुवर्णिपुरोहिताः ।
दण्डनीतिविधौ तस्य नेतुरेते महत्तराः ॥ ६८ ॥

सुहृत्कुमारको दण्डी कोशसामन्तसैनिकाः ।
अन्तःपुरे वर्षवरकिराता मूकवामनाः ॥ ६९ ॥

म्लेच्छाभीरकिराताद्याः विस्रम्भस्यैकभूमयः ।
एवंविधो भवेन्नेता [illegible]कः सपरिच्छदः ॥ ७० ॥

भाषाप्रयोगव्यवस्था ।

राजविप्रविटामात्यसुभटाधीतयोषिताम् ।
नटनर्तकधूर्तानां संस्कृतं पाठ्यमुच्यते ॥ ७१ ॥

देवदानवगन्धर्वसिद्धनागेशरक्षसाम् ।
काञ्चुकीयप्रतीहारलिङ्गिनीवणिजामपि ॥ ७२ ॥

विद्याधरवर्षवरमहादेवीविलासिनाम् ।
योगिनां योगिनीनां च संस्कृतं सम्प्रयोजयेत् ॥ ७३ ॥

छद्मलिङ्गप्रविष्टानां निर्ग्रन्थानां तपस्विनाम् ।
शाक्यचक्रचराणां च संस्कृतं न प्रयोजयेत् ॥ ७४ ॥

अधमानां कुविद्यानामज्ञानामल्पचेतसाम् ।
क्षुत्पीडाविकलानां च संस्कृतं न प्रयोजयेत् ॥ ७५ ॥

स्त्रीणां तु प्राकृतं प्रायश्शूरसेन्यधमेषु च ।
पिशाचात्यन्तनीचादौ पैशाचं मागधं तथा ॥ ७६ ॥

शकारभाषा पण्डानां प्रकृत्या जडचेतसाम् ।
यद्देश्यं नीचपात्रं यत् तद्देश्यं तस्य भाषितम् ॥ ७७ ॥

आभीरभाषा वक्तव्या सर्वेषां घोषवर्तिनाम् ।
कार्यतश्चोत्तमादीनां कार्यो भाषाविपर्ययः ॥ ७८ ॥

शृङ्गाररसमूर्च्छायां गीते च ऋतुवर्णने ।
सर्वासामपि नारीणां संस्कृतं सम्प्रयोजयेत् ॥ ७९ ॥

---

१. $T_1$. 8 तापस for दानव.
२. P जटावतां.
३. P $T_3$ घोषवासिनां.

भगवन्तोऽपरैर्वाच्या विद्वद्देवार्षिलिङ्गिनः ।
विप्रामात्याग्रजाचार्यनटीसूत्रभृतो मिथः ॥ ८० ॥

विदूषकेण सर्वत्र नायिका परिचारिका ।
राजमाता च धात्री च भवतीति निगद्यते ॥ ८१ ॥

राज्ञा वयस्य इत्येव नामपूर्वं विदूषकः ।
विदूषकेण राजा च निर्नामं तद्वदेव हि ॥ ८२ ॥

भावोऽनुगेन सूत्री च मार्षेत्येतेन सोऽपि च ।
आमन्त्रणीया ह्यन्योन्यमेवमन्येऽपि युक्तितः ॥ ८३ ॥

अङ्कास्यः ।

अङ्कान्तसंस्थितैः पात्रैरुत्तराङ्कार्थसूचनम् ।
विचित्रभणितिप्रायमङ्कास्यं कथ्यते बुधैः ॥ ८४ ॥

प्रवेशकः ।

अङ्कद्वयान्तरालस्थो नीचपात्रप्रयोजितः ।
प्रकृत्युत्पन्नभाषावानिति ज्ञेयः प्रवेशकः ॥ ८५ ॥

मलयजमुनिपुङ्गवेन तुङ्ग-
स्फुरितयशोविसरेण नाटकादेः ।
रचितमिदमुदीक्ष्य लक्ष्म रम्य-
स्मितमधुराननतां व्रजन्तु सन्तः ॥ ८६ ॥

[3] इति श्रीमन्मलयजमहापण्डितसर्वेश्वराचार्यविरचिते
साहित्यसारे चतुर्थः प्रकाशः ।

---

१. P राजापि विना नाम तथैव हि.
२. M मारिषेत्येव सोऽपि च.
३. M साहित्यसारे चतुर्थः प्रकाशः, PT8 इति सर्वेश्वरविरचिते साहित्यसारे चतुर्थः प्रकाशः.

## पञ्चमः प्रकाशः ।

### काकुः ।

साकाङ्क्षा च निराकाङ्क्षा चेति काकुर्द्विधा[1] भवेत् ।
अनिर्युक्ताक्षरा वाणी साकाङ्क्षेति निगद्यते ॥ १ ॥

निर्युक्ताक्षरसंयुक्ता निराकाङ्क्षा भवेदिह ।

### रसस्वरूपम् ।

अन्यैरव्यक्तमुक्तत्वाद् दुर्विज्ञेयतयापि च ॥ २ ॥
रसः सस्मेरमस्माभिः सम्यगेव विचार्यते ।

विभावैः सानुभावोद्यत्सात्त्विकव्यभिचारिभिः ॥ ३ ॥
स्वादुत्वं[2] नीयमानोऽसौ स्थायी भावो रसो भवेत् ।

### विभावः ।

निरन्तरपदव्यापी सदैव रसपोषकृत् ॥ ४ ॥
कोऽपि हेतुस्तदुत्पत्तेर्विभाव इति कथ्यते ।

### अनुभावः ।

विकारः कोऽपि शारीरो भावसंसूचनात्मवान् ॥ ५ ॥

अनुभाव इति प्राज्ञैराख्यातो भरतादिभिः ।

### सात्त्विकभावाः ।

सुखदुःखादिभिर्भावैरनुकारिण्यवस्थितैः ॥ ६ ॥

निरन्तरसमुद्भूतैर्भावस्तद्भावभावनम् ।
यद्यप्याकलयन्त्युच्चैरनुभावादभिन्नताम् ॥ ७ ॥

१. PT3 द्विविधा काकुरुच्यते·
२. PT3 स्वादुताम् ·

पृथगेव भवन्त्येते भावाः सर्वत्र सात्त्विकाः ।
स्तम्भप्रलयरोमाञ्चस्वेदा वैवर्ण्यवेपथू ॥ ८ ॥

अश्रु वैस्वर्यमित्यष्टौ सात्त्विकाः परिकीर्तिताः ।
स्तम्भस्तु निष्क्रियाङ्गत्वं प्रलयो नष्टसंज्ञता ॥ ९ ॥

रोमाञ्चो रोमनिर्भेदः स्वेदः शीकरनिर्गमः ।
वैवर्ण्यं वर्णनाशः स्यात् वेपथुर्गात्रकम्पनम् ॥ १० ॥

अश्रु नेत्राम्बु वैस्वर्यं विस्वरत्वमुदाहृतम् ।
नाटकादिष्विमे भावा नाट्यतत्त्वविचक्षणैः ॥ ११ ॥

सत्त्वादेव समुत्पत्तेः सात्त्विका इति संज्ञिताः ।

व्यभिचारिभावाः ।

सविशेषाभिमुख्येन स्थायिनोऽन्तश्चरन्ति ये ॥ १२ ॥

सम्यगुन्मग्ननिर्मग्नास्ते[१] मता व्यभिचारिणः ।
निर्वेदग्लानिचिन्तेर्ष्यामदमोहमतिश्रमाः ॥ १३ ॥

शङ्काधृतिस्मृतिव्रीडावितर्कोन्माददीनताः ।
आवेगालसतात्रासव्रीडामर्षोग्रतास्मयाः ॥ १४ ॥

जडतामरणस्वप्नविषादौत्सुक्यविभ्रमाः ।
अपस्मारावहित्थनिद्राप्रबोधप्रीतयस्तथा ॥ १५ ॥

त्रयस्त्रिंशदिमे भावा विख्याता[२] व्यभिचारिणः ।
सर्वलोकप्रसिद्धोऽसौ निर्वेदः स्वावमाननम् ॥ १६ ॥

तत्त्वज्ञानापदीर्ष्यादेस्तदुत्पत्तिर्हि दृश्यते ।
ग्लानिः शरीरवैवश्यं कथ्यते सर्वकोविदैः ॥ १७ ॥

१. T1 त इमे व्यभिचारिणः.
२. M विज्ञेया.

उत्पाद्यते तनु सर्वत्र क्षुत्पिपासागतिश्रमैः ।
भवेयुस्तत्र वैवर्ण्यकम्पानुत्साहविक्रियाः ॥ १८ ॥

सर्वैः सर्वत्र निर्दिष्टा चिन्ता ध्यानैकतानता ।
इष्टनाशादनिष्टस्य सम्भवाद्वा तदुद्भवः ॥ १९ ॥

तत्र स्युश्चित्तवैक्लव्यतापनिश्वासनिर्गमाः ।
परोत्कर्षाक्षमासूया कल्पनीया मनीषिभिः ॥ २० ॥

गर्वदौर्जन्यमन्युभ्यः साधु संजायते नृणाम् ।
दोषोक्त्यवज्ञाभ्रुकुटीतर्जनानि भवन्ति हि ॥ २१ ॥

हर्षोत्कर्षो मदः प्रोक्तः परिपाकमित देहिनाम् ।
अभीष्टप्राप्तिसम्भोगपानादिभ्यः समुद्भवैः ॥ २२ ॥

स्खलदङ्गवचो मुग्धगतयः संभवन्ति हि ।
मोहो विचित्तता ज्ञेया देहनैवश्यकारिणी ॥ २३ ॥

तस्यापि सम्भवो भीतिदुःखावेशानुचिन्तनैः ।
तत्राज्ञानभ्रमापातघूर्णनादर्शनादयः ॥ २४ ॥

मतिस्तत्त्वगता बुद्धिरुग्रा शिष्टसम्मता ।
सापि निष्पद्यते लोके शास्त्राभ्यासस्य सम्पदः ॥ २५ ॥

तत्राभ्रान्तिगुणोत्कर्षसन्देहचिन्तनादयः ।
खेदः सर्वाङ्गविश्रान्तिः श्रम इत्यभिधीयते ॥ २६ ॥

स युद्धमार्गगत्यादिव्यापारेणोपजायते ।
अस्मिन्नपि स्युरङ्गेषु स्वेदसम्मर्दनादयः ॥ २७ ॥

अनर्थादौ समुत्पन्ने शङ्का स्यात् प्रतिभाक्षयः ।
पराविनयतः स्वस्य दुर्नयाद् वोपजायते ॥ २८ ॥

भवेयुरस्मिन्नातङ्ककम्पवैवर्ण्यवेदनाः ।
अशेषभोगभोक्तृत्वं धृतिरित्यभिधीयते ॥ २९ ॥

१. P $T_3$ वैक्लव्य.
२. The next twenty lines are missing $T_3$.

शक्तिज्ञानादिसन्तोषात् सापि सञ्जायते परम् ।
अस्यामभिमतानन्दसंप्राप्तिरधिकं भवेत् ॥ २० ॥

कथ्यते विबुधैः सर्वैः स्मृतिः संस्मरणादयः
सदृशज्ञानचिन्तादिसम्पद्भ्यः सापि जायते ॥ २१ ॥

एतस्यामनुभावाः स्युर्भ्रूसमुन्नमनादयः[3] ।
व्याधयः सन्निपाताद्यास्तेषामन्यत्र विस्तरः ॥ २२ ॥

वितर्कस्तु विचारः स्यादतिसन्दिग्धवस्तुनि ।
विकल्पशास्त्रप्रश्नादेरुत्पत्तिस्तस्य दृश्यते ॥ २३ ॥

तत्राङ्गुलीविचलनभ्रूशिरोवक्रतादयः ।
अनिरूपितकारित्वमुन्मादः [4]परिकीर्तितः ॥ २४ ॥

ज्ञानाभावान्यतात्पर्यशोकादिभ्यः स जायते ।
तस्मिन्नस्थानरुदितगीतहासस्मितादयः ॥ २५ ॥

सर्वेष्वङ्गेष्वनौजस्यं दैन्यमाहुर्मनीषिणः ।
इह सन्दृश्यतेऽस्माभिर्दौर्गत्यात्तस्य संभवः ॥ २६ ॥

तत्रैते स्वयमेव स्युर्मालिन्यानादरादयः ।
आवेगः सहसा जातः सम्भ्रमो हि निगद्यते ॥ २७ ॥

राज्ञानिलाहितस्निग्धवृष्टिवह्निभ्य एव च ।
उत्पातादथवा नाशादुत्पत्तिस्तस्य दृश्यते ॥ २८ ॥

शस्त्रनागाभियोगादिर्दृश्यते राजविप्लवे ।
वातादौ पांसुसम्पाते रिपुजे दुःखसन्ततिः ।
मित्रजे हर्षसम्पातो वृष्टिजे पिण्डिताङ्गता ॥ २९ ॥

१. M अस्याममिहितानन्द, P अत्यन्ताभिमतानन्द
२. $T_1$. सम्पत्त्या.
३. The next forty five lines are full of lacunae in $T_3$.
४. M सम्प्रकीर्तितः.
५. The next three lines are missing in M.
६. P वातजे.

वह्निजे धूमसम्पातस्तस्ततोत्पातजो भवत् ।
करिजे स्युर्भयस्तम्भकम्पापसरणादयः ॥ ४० ॥

सर्वाङ्गसादि लोकानामालस्यं जिह्मता[1] मता ।
उद्भूतिश्श्रमगर्भादेस्तस्य सन्दृश्यते जनैः ॥ ४१ ॥

तस्यानुभावा वैवर्ण्यस्तोकभाषणजृम्भिताः ।
तत्त्वज्ञैर्मनसः कम्पस्त्रास इत्यभिधीयते ॥ ४२ ॥

गजमेघाशनिस्थूणासङ्घट्टादुपजायते ।
भवन्ति पतनोत्कम्पसम्भूतालोकनादयः ॥ ४३ ॥

अङ्गनामहिमाहेतुर्लज्जा व्रीडेति कथ्यते ।
अगम्यागमनादिभ्यः सा परं जायते भुवि ॥ ४४ ॥

अङ्गावरणवैवर्ण्यसाचीकृतमुखादयः ।
अमर्षोऽभिहितः सद्भिर्दोषेष्वभिनिवेशनम् ॥ ४५ ॥

अधिक्षेपात्प्रमादाद् वा रोषाद्वा जायते च सः ।
तत्र स्वेदाक्षिचलनताडनप्रहणादयः ॥ ४६ ॥

चण्डतैव हि सर्वेषामुग्रता विदुषां मता ।
दुष्टापवाददौर्मुख्यचौर्यैः सा जायते परम् ॥ ४७ ॥

तत्र स्वेदशिरःकम्पतर्जनाताडनादयः ।
स्मयः सर्वजनोन्मादी गर्व एवेह कथ्यते ॥ ४८ ॥

ऐश्वर्यबललावण्यरूपेभ्यस्तत्समुद्भवः ।
तत्रावज्ञाविलासाङ्गविभूषालटहादयः ॥ ४९ ॥

प्रतिपत्तेरभावेन स्तब्धता जडता मता ।
सा समुत्पद्यते लोके दयितालोकनादिभिः ॥ ५० ॥

अस्यामपि भवेत् सद्यस्त्वनिमेषनिरीक्षणम् ।
प्रसिद्धमपि वक्तव्यं मरणं भूतपञ्चता ॥ ५१ ॥

१. T1 : जिह्मतिमता।

विरहव्याधिदुष्कर्मविधिभ्यस्तस्य सम्भवः ।
जनताशोकाविण्मूत्रस्तम्भनिश्चेष्टतादयः ॥ ५२ ॥

सम्मीलनं हि चित्तस्य निद्रेति परिगीयते ।
दुःखातिरेकवैक्लव्यमनःखेदादिभिर्भवेत् ॥ ५३ ॥

तत्र स्युरङ्गविक्षेपश्वासायासक्रियादयः ।
**विषादः** कथ्यतेऽस्माभिः सत्त्वस्येवेह संक्षयः ॥ ५४ ॥

प्रारब्धवस्तुभङ्गादेरुत्पत्तिस्तस्य दृश्यते ।
निश्वासोच्छ्वासहृत्तापसहायान्वेषणादयः ॥ ५५ ॥

कालाक्षमत्व**मौत्सुक्यं** कथ्यते कविपुङ्गवैः ।
हृद्यवस्तुसुहृद्योगरत्यास्थादेस्तदुद्भवः ॥ ५६ ॥

तत्रोच्छ्वासत्वरात्रासहृत्तापस्वेदविभ्रमाः ।
**विभ्रमः** कथ्यते श्लाघ्यैरात्मश्लाघाक्रमादयः ॥ ५७ ॥

हृद्यकालकलाकान्ताकलापैरुपजायते ।
तत्रानुभावा रोमाञ्चस्वेदमन्दस्मितादयः ॥ ५८ ॥

भूतप्रेतपिशाचानाम**पस्मारो**ऽधिरोहणम् ।
मन्त्रतन्त्रक्रियालेपैः सोऽपि सम्पद्यते नृणाम् ॥ ५९ ॥

भूवातकम्पप्रस्वेदलालाफेनोद्गमादयः ।
काले मनस्संवरण**मवहित्थं** विदुर्बुधाः ॥ ६० ॥

लज्जादिविक्रियाहेतुस्तत्समुत्पत्तिकर्मणः ।
तत्र साचीनवक्त्रत्वमिथ्याजल्पविहस्तताः ॥ ६१ ॥

अनवस्थाक्रमाकारमान्ध्यं चापलमेव हि ।
कथ्यते च तदुत्पत्तौ हेतुर्मर्कटचित्तता ॥ ६२ ॥

तत्रानुभावाः पारुष्यस्वच्छन्दाचरणादयः ।
निद्राभावः प्रबोधः स्यादसौ विख्यात एव हि ॥ ६३ ॥

स तु सर्वत्र सन्तोषपरिमाणादिसम्भवः ।
तत्र जृम्भाशिरःकम्पनयनोन्मीलनादयः ॥ ६४ ॥

सर्वाङ्गिणः प्रमोदस्य व्यापारो हर्ष उच्यते ।
अभिप्रेतोत्सवादिभ्यस्तस्य जन्मोपलभ्यते ॥ ६५ ॥

तस्मिन्नेवोपजायन्ते सस्वेदा गद्गदा गिरः ।
[illegible] ।
न तिरस्क्रियते योऽन्यैर्भावैर्विपरिवर्तिभिः ॥ ६६ ॥

अन्येषामात्मतां कुर्वन् स स्थायी कथ्यते बुधैः ।
भावके वर्तमानत्वादास्वाद्यत्वाच्च भूयशः ॥ ६७ ॥

रसः स एव निर्दिष्टो रसिकैर्भरतादिभिः ।
वृत्तेरकार्ये चेत् स्वादः कस्येदानीं सुखावहः ॥ ६८ ॥

काव्यं न तत् प्रीतिकरं वर्तमानसुखावहम् ।
स्वदते कथमस्थायी निर्वेदादिरनादितः ॥ ६९ ॥

तद्रूपभावविभवस्तेनाष्टौ स्थायिनः स्मृताः ।
रत्युत्साहौ जुगुप्सा च शोकमोहभयस्मयाः ॥ ७० ॥

क्रोधश्च कश्चिदस्त्यन्यो नेहास्माभिः स कथ्यते ।
एतेषां काव्यबन्धेन स्वशब्दैरनिवेदितः ॥ ७१ ॥

सम्बन्धः कल्पनीयो हि भाव्यभावकसंश्रितः ।
शश्वत् सहृदयग्रन्थे परिनिष्ठितचेतसः ॥ ७२ ॥

१. $T_2$ वाक्यं.
२. M शोकमोहौ भयंस्मयौ.

काव्यार्थभावनास्वादो नर्तकस्यापि वर्तताम् ।

स्वादः ।

स्वादः काव्यार्थसम्भेदादात्मन्यानन्दसम्भवः ॥ ७३ ॥

विकासविस्तरक्षोभविक्षेपैः स चतुर्विधः ।
शृङ्गारवीरबीभत्सरौद्रेषु मनसः क्रमात् ॥ ७४ ॥

हास्याद्भुतभयोत्कर्षकरुणानां त एव हि ।

शृङ्गारः ।

हृद्यदेशकलावेषकालभोगादिभूषितः ॥ ७५ ॥

यूनोरन्योन्यसंसक्तचेतसोः सदृशोदयः ।
निर्भरो यः प्रमोदः स्यात् स एव हि रतिः स्मृतः ॥ ७६ ॥

सैव लावण्यपीयूषभूयोभिश्चेष्टितैः ।
प्रकृष्यमाणा शृङ्गारः सैरिह कथ्यते ॥ ७७ ॥

भावा एकोनपञ्चाशदेतेऽस्य परिपोषकाः ।
आलस्यमरणोग्रत्वजुगुप्सास्तु विरोधिनः ॥ ७८ ॥

असम्भवोऽवियोगश्च सम्भोगश्चेति स त्रिधा ।
असम्भवोऽनुरागः स्याद् यूनोरासक्तचित्तयोः ॥ ७९ ॥

सङ्गमाभावसुभगः पराधीनतया मिथः ।
भवन्त्यत्र दशावस्था निर्दिष्टाः शास्त्रकोविदैः ॥ ८० ॥

संस्मृत्युद्वेगाभिलाषप्रलापोन्मादसंज्वराः ।
चिन्तागुणकथाजाड्यमरणानि यथाक्रमम् ॥ ८१ ॥

जगतस्तन्मयत्वेन दर्शनं संस्मृतिः स्मृता ।
हृद्यवस्तुषु विद्वेषो ह्युद्वेगः कथ्यते बुधैः ॥ ८२ ॥

१. M स्वादुः.
२. M एतेऽस्य.

अभिलाषः स्पृहा प्रोक्ता काम्ये सर्वाङ्गसुन्दरे ।
असम्बद्धकथालापः प्रलाप इति कथ्यते ॥ ८३ ॥

उन्मादश्चेतसो भ्रान्तिरनवस्थानिबन्धना ।
संज्वरस्तु समस्ताङ्गव्यापी तापोदयो महान् ॥ ८४ ॥

चिन्ता सदैव तल्लमा बुद्धिरन्यानपेक्षिणी ।
तदलाभे तत्प्रशंसा गुणाख्यानं निगद्यते ॥ ८५ ॥

चिन्तास्तिमितकायत्वं जळता विदुषां मता ।
सुप्रसिद्धं तु मरणं सर्वेषां कीर्तिशेषता ॥ ८६ ॥

वियोगो विप्रलम्भः स्यादतिविस्रब्धयोर्द्वयोः ।
मानप्रवासभेदेन स पुनर्द्विविधो भवेत् ॥ ८७ ॥

स्त्रीणामीर्ष्याकृतो मानः कोपोऽन्यासङ्गिनि प्रिये ।
श्रुते वा कल्पिते बुद्ध्या दृष्टे वा तत्समुद्भवः ॥ ८८

श्रुतिः सखीमुखाचत्र कर्तव्या नाटकादिषु ।
अनुमाच्छलनिद्रान्ध्यगोत्रस्खलनलक्षणा ॥ ८९ ॥

सर्वत्र दर्शनोत्पन्नः साक्षादिन्द्रियगोचरः ।
तत्र माने सुमहति षडुपायविधिः स्मृतः ॥ ९० ॥

सामभेदौ प्रदानं च नत्युपेक्षा रसान्तरम् ।
तत्र प्रियवचः साम भेदस्तत्सख्युपार्जनम् ॥ ९१ ॥

दानं भूषणदानादि पादयोः पतनं नतिः ।
उपेक्षा समये निन्दा तदीयजनसंसदि ॥ ९२ ॥

रभसत्रासहर्षादेः कोपभ्रंशो रसान्तरम् ।
अन्यः प्रणयमानः स्यादव्यापारसमुद्भवः ॥ ९३ ॥

प्रवासो भिन्नदेशत्वं[1] कार्यसम्भ्रमशापजः ।
अनुभावा भवन्त्यत्र द्वयोरपि विशेषतः ॥ ९४ ॥

---

1. P देशभिन्नत्वं.

निश्वासनिर्गमत्रासकार्श्यलम्बालकादयः ।
सोऽपि भावी भवाज्जात इति त्रेधैव निश्चितः ॥ ९५ ॥

अनुकूलौ निषेवेते यत्रान्योन्यं विलासिनौ ।
दर्शनस्पर्शनादीनि स सम्भोगो मुदान्वितः ॥ ९६ ॥

चेष्टास्तत्र प्रवर्तन्ते लीलाद्या दश योषिताम् ।

वीरः ।

विभावितः प्रभावाद्यैर्दानाद्यैरनुभावितः ॥ ९७ ॥

भावितः स्मृतकार्श्याद्यैरुत्साहो वीरतां व्रजेत् ।

बीभत्सः ।

विभावितो विस्रगन्धवमथुश्लेष्मकीटकैः ॥ ९८ ॥

रुधिरान्त्रवसामांसैरत्यर्थमनुभावितः ।
भवेज्जुगुप्सा बीभत्सो ह्यावेगप्रायभावितः ॥ ९९ ॥

रौद्रः ।

परप्रवृद्धिविद्वेषवैरिवैकृतसम्भवः ।
भ्रुकुटीरचनाकम्पस्वेदाद्यैरनुभावितः ॥ १०० ॥

भावितो मदगर्वाद्यैः क्रोधो रौद्रो भवेत् स्वयम् ।

हासः ।

विकृताकृतिवाग्वेषैरात्मनो वापरस्य वा ॥ १०१ ॥

विभावितो भवेद्धासो हास्यस्मितविशेषितः ।
स्मितमुत्फुल्लनयनं हसितं साद्विजप्रभम् ॥ १०२ ॥

स्वनयुक्तं विहसितमुपहासस्तु कम्पकृत् ।
अपहासः सनीराक्षो ह्यतिहासोऽप्रपातकः ॥ १०३ ॥

ज्येष्ठमध्यकनिष्ठानां द्वौ द्वौ स्यातां यथाक्रमम् ।
निद्रालस्यश्रमग्लानिमूर्छाद्या व्यभिचारिणः ॥ १०४ ॥

अद्भुतः ।

[1]अतिलोकैः पदार्थैः स्याद् विस्मयात्मा रसोऽद्भुतः ।
अस्यानुभावा नेत्राम्बुवेपथुस्वेदगद्गदाः ॥ १०५ ॥

हर्षावेगधृतिप्राया भवन्ति व्यभिचारिणः ।

भयानकः ।

विकृतस्वनसत्त्वादेर्भयभावो भयानकः ॥ १०६ ॥

प्रभूतस्वेदवैवर्ण्यशोषवेपथुलक्षणः ।
त्राससम्भ्रमसम्मोहदैन्यानि व्यभिचारिणः ॥ १०७ ॥

करुणः ।

इष्टनाशादनिष्टादेः शोकात्मा करुणो रसः ।
निश्वासोच्छ्वासरुदितस्तम्भप्रलपितादयः ॥ १०८ ॥

तत्रापस्मारदैन्याच्ध्यसम्भ्रमा व्यभिचारिणः ।

रसानां वर्णदेवतादयः ।

श्यामवर्णस्तु शृङ्गारो विष्णुस्तत्राधिदैवतम् ॥ १०९ ॥

गौरो वीरस्तु विज्ञेयो महेन्द्रस्तस्य देवता ।
नीलवर्णो हि बीभत्सो महाकालोऽधिदैवतम् ॥ ११० ॥

रौद्रः कपोतवर्णः स्यात् रुद्रस्तस्याधिदैवतम् ।
सितो हास्यः स्मृतः सद्भिरीशः प्रथमदैवतम् ॥ १११ ॥ मथ

पीतवर्णोऽद्भुतः प्रोक्तस्तस्याधीशः पितामहः ।
भयानकः कृष्णरूपः स हि कालाधिदैवतः ॥ ११२ ॥

हरिद्वर्णस्तु करुणो यमस्तदधिदैवतम् ।
अनेनैव क्रमेणासौ ज्ञातव्यो रसविस्तरः ॥ ११३ ॥

शृङ्गारे कैशिकी, वीरे सात्त्वत्यारभटी पुनः ।
रसे रौद्रे सबीभत्से, वृत्तिः सर्वत्र भारती ॥ ११४ ॥

१. M T1. 2 अतिलोकपदार्थैः.

यत्र बीजस्य संहारो यत्रार्थः पर्यवस्यति ।
सर्वेषां यत्र निष्क्रामः सोऽन्त इत्यवगम्यताम् ॥ ११५ ॥

— × —

धर्मस्स्वधर्मानुष्ठानं धर्माणां वा विधेयता ।
प्रजानां पालनेनैव षड्भागग्रहणं धनम् ॥ ११६ ॥

समानकुलधर्माढ्यगृहिण्यां गृहमेधिनः ।
कृतकृत्यस्य सम्भोगः काम इत्यभिधीयते ॥ ११७ ॥

निश्शेषासारसंसारविचारचतुरात्मनः ।
मोक्षः स्याज्ज्ञानसम्पत्त्या परमानन्दसङ्गतिः ॥ ११८ ॥

संमिश्राः केवला वा स्युरेतत् सर्वत्र नाटके ।
समासौ सर्वसन्तोषो बुधर्कप्रीतिरुच्यते ॥ ११९ ॥

उक्तलक्षणनिष्पत्तिप्रसत्त्या सम्यगर्पितम् ।
पञ्चाङ्कं नाटकं हीनं दशाङ्कं प्राहुरुत्तमम् ॥ १२० ॥

सर्वेश्वरो रसविशेषविचारमेव-
मापादयन्नमृतसोदरवाक्प्रवाहैः ।
आनन्दहेतुरधुना भुवि कस्य न स्यात्
साहित्यसारसरसीरुहराजहंसः ॥ १२१ ॥

इति श्रीमन्मलयजमहापण्डितसर्वेश्वराचार्यविरचिते साहित्यसारे
पञ्चमः प्रकाशः ।

M· इति साहित्यसारे पञ्चमः प्रकाशः, PT3 इति सर्वेश्वराचार्यविरचिते रसस्रोतसि पञ्चमः प्रकाशः ।

## षष्ठः प्रकाशः ।

### नाटकम् ।

कीर्तिकामो महोत्साहो धीरोदात्तः प्रतापवान् ।
अभिगम्यगुणैर्युक्तः त्रय्यास्त्राता महीपतिः ॥ १ ॥

कर्तव्यो नाटके नेता देवो राजर्षिरेव वा ।
प्रख्यातमेव कर्तव्यं वृत्तमप्याधिकारिकम् ॥ २ ॥

अत्यर्थानुचितं यत् स्यात् नायकस्येतरस्य वा ।
तत् परित्यज्यतां सम्यगन्यथा वा प्रकल्पयेत् ॥ ३ ॥

साद्यन्तं वस्तु निश्चित्य पञ्चधा संविभज्य च ।
खण्डशस्सन्धिसंज्ञांस्तान् भागान् कुर्याद् विचक्षणः ॥ ४ ॥

चतुष्षष्ट्यङ्गसन्धानं तदङ्गैः[1] कल्पयेत् पुनः ।
पताकावृत्तमप्यूनं विन्यसेत प्रकरीमपि ॥ ५ ॥

विष्कम्भकं वा प्रथममङ्कं वा कार्ययोगतः ।
प्रत्यक्षनेतृचरितः सबिन्दुव्याप्तिभूषणः ॥ ६ ॥

अङ्को नानाप्रकारार्थसार्थ एव हि शोभनः ।
सविभावानुभावान्यस्थायिनः[2] सम्यगङ्गिनः ॥ ७ ॥

गृहीतमुक्तैः कर्तव्यं प्रौढत्वं व्यभिचारिभिः ।
न नयेद् वस्तुविच्छेदमत्यन्तरसपोषणात् ॥ ८ ॥

रसं च न तिरोदध्यात् वस्त्वलङ्कारलक्षणैः ।
शृङ्गारोऽप्यथवा वीरः[3] कर्तव्यो वाङ्गिलक्षणः ॥ ९ ॥

रसानां पुनरन्येषां अङ्गत्वं प्रतिपाद्यताम् ।
भोजनस्नानसुरतवधसंरोधसङ्करान् ॥ १० ॥

---

१. T1·2 तदंशैः.
२. T1.4. भावान्यस्थायिनः PT3 भावो वा स्थायिनः.
३. T1. करुणो.

विवाहदूरगमन देशराज्याद्युपप्लवान् ।
गन्धमाल्याम्बरादीनि प्रत्यक्षाणि न निर्दिशेत् ॥ ११ ॥

द्वित्राणामेव पात्राणामेकदैवागमो भवेत् ।
सर्वेषां निर्गमे जाते सम्भवेन्नेतृनिर्गमः ॥ १२ ॥

प्रकरणम् ।

ततः प्रकरणे वस्तु वक्तव्यं समनीषया ।
लोकवार्ताश्रयं हृद्यं व्यवहारक्रमोचितम् ॥ १३ ॥

सचिवद्विजवैश्यानां एक एव हि नायकः ।
धीरप्रशान्तः सोपायो धर्मकामार्थतत्परः ॥ १४ ॥

द्विविधा नायिका तत्र कुलस्त्री गणिका तथा ।
क्वचिदेकैव कुलजा वेश्या क्वापि द्वयं क्वचित् ॥ १५ ॥

अभ्यन्तरस्था कुलजा वेश्या बाह्यैव सर्वदा ।
शुद्धं शुद्धेतरं तद्वत् सङ्कीर्णमिति तत्त्रिधा ॥ १६ ॥

शुद्धं कुलस्त्रिया युक्तमितरद् गणिकाश्रितम् ।
आभ्यां सङ्कीर्णकं धूर्तविटचेटीजनाश्रितम् ॥ १७ ॥

शेषं नाटकवत् सन्धिप्रवेशकरसादिकम् ।

नाटिका ।

अत्रैव वर्तते सापि नाटिका नाटकोद्भवा ॥ १८ ॥

तत्र प्रकरणाद् वस्तु नाटकाच्चापि किञ्चन ।
नायको ललितः ख्यातः कामभोगैकनिष्ठितः ॥ १९ ॥

स्त्रीप्राया चतुरङ्का च शृङ्गारोऽङ्गी सलक्षणः ।

१. P T3 विवाहं दूरगमनं देशराज्यादिविप्लवम्.
२. T3 कथ्यते.
३. PT3 जनावृतं.
४. P प्रोक्तः.

देवी तत्र भवेद् ज्येष्ठा प्रगल्भा नृपवंशजा ॥ २० ॥

तदधीनतया कृच्छ्रादन्यस्या नेतृसङ्गमः ।
वृत्तिस्तु कैशिकी तत्र पूर्वोक्ताङ्गसमन्विता ॥ २१ ॥

सन्धिसन्ध्यङ्गरचना यथारम्भं[2] विधीयते ।

सट्टकम् ।

प्रायेण नाटिकाप्रायं चतुर्यवनिकान्तरम्[3] ॥ २२ ॥

विष्कम्भकादिभिः सर्वैर्विहीनं पञ्चसूचकैः ।
सट्टकं स्त्रीजनाकीर्णमेकभाषामयं भवेद् ॥ २३ ॥

भाणम् ।

धूर्तानां चरितं भाणं ख्यातपत्तनसंश्रयम्[1] ।

तत्र पात्रं विटस्त्वेको निपुणः शास्त्रकोविदः ॥ २४ ॥
उक्तिप्रत्युक्तिविधयः सम्यगाकाशभाषितैः ।

विधेयाः कल्पनीयानि लास्याङ्गानि दशापि च ॥ २५ ॥
शृङ्गारवीरौ संसूच्यौ शौर्यसौभाग्यसंस्तवैः ।

मुखनिर्वहणे सन्धी तदङ्गैरपि भूषितः ॥ २६ ॥
एकाङ्कस्थापनायुक्तो भारत्या स तु संस्कृतः ।

ईहामृगः ।

ईहामृगोऽपि विज्ञेयः चतुरङ्कास्त्रिसन्धिकः ॥ २७ ॥
दिव्यावनियतावत्र नायकप्रतिनायकौ ।
धीरोद्धतौ ख्यातवृत्तौ यदृच्छासङ्गता मिथः ॥ २८ ॥

वधूं दिव्यामनिच्छन्तीं हठादाहर्तुमिच्छतः ।
शृङ्गारलेशमधुरः सम्यगारब्धसङ्गरः ॥ २९ ॥

१. Six lines from this are omitted in T3.
२. T1· 2 यथालाभं.
३. T1 चातुर्यवनितान्तरं.

छलेन येन केनापि तत्र युद्धं निवारयेत् ।
सङ्कीर्णो वृत्तवृत्तिभ्यां कर्तव्यश्च कवीश्वरैः ॥ ३० ॥

वीथी ।

वीथी सकैशिकीवृत्तिरेकाङ्का स्थापनावती ।
एकपात्रकृता साङ्गमुखानिर्वहणाश्रिता ॥ ३१ ॥

देवतापसविख्यातकथासम्बन्धशालिनी ।
रसः सूच्यस्तु शृङ्गारः स्पृशेदपि रसान्तरम् ॥ ३२ ॥

हृद्यपद्यावलिप्राया तदङ्गानि त्रयोदश ।
छलप्रपञ्चत्रिगतवाक्केलीगण्डनालिकाः ॥ ३३ ॥

उद्घात्यकावलगिते व्याहारातिबले तथा ।
असत्प्रलापमृदवे तथावस्यन्दितं पुनः ॥ ३४ ।

अशोभनैः शोभनाभैरर्थैरुक्तिश्छलं भवेत् ।
मिथ्यास्तुतिर्मिथो जाता प्रपञ्च इति कथ्यते ॥ ३५ ॥

श्रुतिसौम्यादनेकार्थयोजनं त्रिगतं मतम् ।
वाक्केलिर्मधुरा वाणी नर्मणा गर्भिता भवेत् ॥ ३६ ॥

गण्डमप्रस्तुतं वाक्यं प्रस्तुतस्याविरोधतः ।
प्रहेलिकेव गूढार्था नालिकेति निगद्यते ॥ ३७ ॥

गूढार्थपदसम्बन्धा नानाप्रश्नोत्तरावलिः ।
अन्तर्लापादिकाः सद्भिरुद्घात्यमिति कथ्यते ॥ ३८ ॥

विहाय प्रस्थितं कार्यं यदन्यत् साध्यते नरैः ।
तत्रावलगितं प्राहुस्तदेव कविपुङ्गवाः ॥ ३९ ॥

हासाय प्रस्तुतं वाक्यं व्याहारोऽर्थान्तराश्रितम् ।
अन्योन्यवाक्याधिक्योक्तिः स्पर्धयातिबलं भवेत् ॥ ४० ॥

असत्प्रलापः प्रायेण सम्बन्धरहितं वचः ।
दोषा गुणा गुणा दोषा यत्र स्युर्मृदवं हि तत् ॥ ४१ ॥

वचसामन्यथाव्याख्या ह्यवस्यन्दितमुच्यते
एवंविधाङ्गसम्बन्धा वीथी वीथीविदुच्यते ॥ ४२ ॥

व्यायोगः ।

विख्यातवृत्तो व्यायोगो विख्यातोद्धतनायकः ।
हीनो गर्भविमर्शाभ्यां दीप्ता हास्यादयो रसाः ॥ ४३ ॥
वृत्तिरारभटी प्रायो बहुक्रूरजनावृतः ।
एकाहश्चरितैकाङ्का ह्यस्त्रीकारणसङ्गरः ॥ ४४ ॥

समवकारः ।

कुर्यात समवकारेऽपि सम्यगामुखलक्षणम् ।
ख्याता देवासुरकथा वस्तुत्वेन निरूप्यताम् ॥ ४५ ॥
कैशिक्या रहितास्तत्र वृत्तयः परिकीर्त्तिताः ।
सुरासुरास्तु नेतारो निर्विमर्शाश्च सन्धयः ॥ ४६ ॥
अत्र द्वादश नेतृणां फलं कुर्यात् पृथक् पृथक् ।
वीरप्रायरसस्त्र्यङ्कस्त्रिशृङ्गारस्त्रिविद्रवः ॥ ४७ ॥
कपटत्रितयोपेतः चित्रोक्त्या परिपूरितः ।
द्विसन्धिरङ्कः प्रथमः कार्यो द्वादशनालिकः ॥ ४८ ॥
नालिकानां द्वयोः पश्चात् प्रत्येकं स्यात् चतुष्टयी ।
नालिका[1] घटिकायुग्ममिति सर्वजनश्रुतिः ॥ ४९ ॥
वस्तुस्वभावदैवारिकृताः स्युः कपटास्त्रयः ।
देशोपरोधसङ्ग्रामवाह्निभ्यो विद्रवास्त्रयः ॥ ५० ॥
धर्मार्थकामैः शृङ्गारो नात्र बिन्दुप्रवेशकौ ।
वीथ्यङ्गानि यथाकामं सोपहासानि कल्पयेत् ॥ ५१ ॥

अङ्कः ।

उत्सृष्टिकाङ्के विख्यातं वस्तु बुद्ध्या प्रपञ्चयेत् ।
करुणाख्यो रसः स्थायी नेतारः पूर्वकल्पिताः ॥ ५२ ॥
सन्धिसन्ध्यङ्गवृत्त्यङ्गैर्भाणवत् परिकल्पयेत् ।
स्त्रीणामालापसंलापविलापादिभिराकुलम् ॥ ५३ ॥
वाचा विधेयः सङ्ग्रामो वचसैव जयाजयौ ॥

---

1. M. नाडिका.

प्रहसनम् ।

ततः प्रहसनं प्रायः कल्पयेद् बुद्धिवैभवैः ॥ ५४ ॥

शुद्धं साविकृतं तद्वत् सङ्कीर्णमिति तत् त्रिधा ।
द्विजपाषण्डिदुर्वर्णचेटचेटीविटावृतम् ॥ ५५ ॥

वेषभाषाविभूषाद्यैः शुद्धं हासकृतं भवेत् ।
कामुकैरतिवाचाटैः षण्डदुष्पण्डितादिभिः ॥ ५६ ॥

जरत्कञ्चुकिनिर्ग्रन्थतापसैर्विकृतं स्मृतम् ।
धूर्तकापालिकग्राम्यचोरसंवाहकादिभिः ॥ ५७ ॥

वीथ्यङ्गैरन्तराकीर्णं संकीर्णमिति कथ्यते ।
रसस्तु भूयसा कार्यो हास्यो नानाविधाश्रयः ॥ ५८ ॥

मुखनिर्वहणे सन्धी वृत्तिरेकैव भारती ।
एकोऽङ्कः कल्पनीयः स्यान्नानाहासमनोहरः ॥ ५९ ॥

डिमः ।

डिमो विशेषविख्यातवस्तुविस्तारशोभितः ।
वृत्तयः कैशिकीहीना रसाः शृङ्गारवर्जिताः ॥ ६० ॥

नेतारो देवगन्धर्वयक्षरक्षोमहोरगाः ।
भूतप्रेतपिशाचाद्याः षोडशात्यन्तमुद्धताः ॥ ६१ ॥

मायेन्द्रजालसङ्ग्रामनिर्वातोत्पातसंभ्रमान् ।
चन्द्रसूर्योपरागांश्च सम्यगेव विनिर्दिशेत् ॥ ६२ ॥

रौद्रो रसोऽङ्गी कर्तव्यश्चत्वारोऽङ्काः सुविस्तराः ।
दीर्घवृत्तविचित्रार्थो निर्विमर्शो डिमो भवेत् ॥ ६३ ॥

सन्धिसन्ध्यङ्गवृत्त्यङ्गवृत्तिनायकवस्तुभिः ।
भिद्यमानाङ्कसंकेता भेदाः स्युर्नाटके दश ॥ ६४ ॥

सुदृढराचितबन्धः साधुसर्वेश्वरेण
प्रथितभरतशास्त्रन्यासभूषाविशेषैः ।
मृदुतरपदशय्याशोभितश्शश्वदुच्चैः
स रसिमनसि भूयादेष साहित्यसारः ।। ६५ ।।

इति श्रीमन्मलयजमहापण्डितसर्वेश्वराचार्यविरचिते
साहित्यसारे षष्ठः प्रकाशः ।

साहित्यसारः समाप्तः ।।

अस्य साहित्यसारस्य संख्या सर्वेशकल्पिता ।
भवेदष्टाधिकैवात्र षट्छती सुमनोहरा ।।

जयति स सर्वेशकविः कर्ता साहित्यसाररचनायाः ।
श्रीवामराशिदेवो यस्य गुरुर्मुनिर्भवेत् ।। ?

१. M सरसमनसि.
२. PT इति सर्वेश्वराचार्यविरचिते साहित्यसारे षष्ठः प्रकाशः

# ॥ साङ्केतिकपदानुक्रमणी ॥

# श्लोकार्धानुक्रमणी